॥ श्रीः ॥

श्रीनिवास - स्तोत्र - ग्रन्थमाला —

षष्ठ पुष्प

# ॥ श्री आळवन्दारस्तोत्ररत्नम् ॥

[ श्री वरदवल्लभास्तोत्र - रामानुजच[illegible]की सहितम् ]

प्रसारक —

श्रीनिवास उद्योग प्रतिष्ठान

श्रीनिवास हाउस, वॉडवी रोड,

फ़ोर्ट, बम्बई - १.

प्रकाशक —
सुदर्शन शास्त्री, M. Com., LL. B.
सचिव, भारती पब्लिकेशन्स प्रा. लि.;
इन्दौर।

* * *

मुद्रक — श्रीमती दुर्गाबाई शास्त्री, मैनेजिंग डायरेक्टर,
भारती प्रिंटिंग प्रेस,
भारती भुवन, १५१, इमली बाजार,
इन्दौर - ४ (म. प्र.)।

* * *





प्रथमावृत्ति,
नवम्बर १९७२ ई.।

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# श्री आळवन्दार स्तोत्र-रत्नम्

• • •

# श्री वरदवल्लभा स्तोत्रम्

* * *

# श्री रामानुज चतुःश्लोकी

॥ श्रीः ॥

# विषय सूंची

॥ श्रीः ॥

# प्राक्कथन

श्री आळवन्दार स्तोत्र की श्रीवैष्णव सम्प्रदाय में बड़ी महिमा है। नित्य प्रबन्ध-पाठ में विहित स्तोत्रों में इसका स्थान कहीं उच्च है। इसका प्रमुख कारण रचनागत काव्य-सौन्दर्य एवं भक्त की उच्च कोटि की भावुकता है। इस स्तोत्र का असली नाम स्तोत्र-रत्न है जो सर्वथा चरितार्थ है। इसके रचयिता श्रीमन्नाथमुनि के पौत्र श्री यामुनाचार्य हैं। अपनी अप्रतिम विद्वत्ता के बल शास्त्रार्थ में अद्भुत विजय प्राप्त कर श्री यामुनाचार्य ने चोल मण्डल के राजा से आधा राज्य अर्जित कर लिया था। तब उन्हें महारानी ने आळवन्दीरा[1] (= क्या शासन करने आये हो) कहकर सम्बोधित किया था; तब से श्री यामुनाचार्य का प्रथित नाम

---

१. यह प्रसंग बड़ा रोचक है; सविस्तर वर्णन के लिये देखो — भूमिका — श्री आळवन्दार स्तोत्र — हिन्दी अनुवाद तथा विवृति सहित संस्करण — [ भारती पब्लिकेशन्स, इन्दौर ]

"आळवन्दार" (शासन करने आये) चल पड़ा। स्तोत्रकर्त्ता के नाम से उनकी यह सुप्रसिद्ध कृति "स्तोत्र-रत्नम्" श्री आळवन्दार स्तोत्र के नाम से विख्यात हो गया।

परम्परा के अनुसार श्री आळवन्दार स्तोत्र के पश्चात् पराम्बा महालक्ष्मी की स्तुति "श्रीवरदवल्लभास्तोत्र" के पाठ का क्रम श्रीवैष्णवों में प्रचलित है। ये दोनों स्तोत्र दक्षिण की सब ही भाषाओं में मुद्रित उपलब्ध हैं, जिनमें कहीं कहीं पाठभेद भी मिलते हैं। देवनागरी लिपि में प्रकाशित 'स्तोत्ररत्नम्' के संस्करण बहुत्र अशुद्ध एवं पाठदोष से भरपूर हैं। यह दुरवस्था देखकर नित्य प्रबन्ध-पाठ शुद्ध किया जा सके इस उद्देश्य से, श्रीनिवास उद्योग प्रतिष्ठान, बम्बई की प्रेरणा से यह नित्यपाठोपयोगी संस्करण श्रीरामानुज-चतुःश्लोकी सहित प्रकाशित किया जा रहा है।

आशा है यह मूलपाठ प्रपन्न श्रीवैष्णवों के लिये अपने धर्मानुष्ठान में सहायक सिद्ध होगा।



गीता जयन्ती, वि. सं. २०२८.

प्रकाशक।

॥ श्रीः ॥

॥ श्रीमते वेङ्कटेशाय नमः ॥

नित्याय निरवद्याय सत्यानन्तचिदात्मने ।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ॥

॥ श्रीः ॥

श्रीमते रामानुजाय नमः

# आळवन्दार स्तोत्र प्रारम्भः

[ पद्यम् ]

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् ।
स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ॥ १ ॥

नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥ २ ॥

नमो यामुनपादाब्जरेणुभिः पावितात्मने ।
विदिताखिलवेद्याय गुरवे विदितात्मने ॥ ३ ॥

# अथ स्तोत्र-रत्नम्

[ पद्यम् ]

नमोऽचिन्त्याद्भुताक्लिष्ट-ज्ञानवैराग्यराशये ।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ १ ॥

[ वसन्ततिलकम् ]

तस्मै नमो मधुजिदंघ्रिसरोजतत्त्व-
ज्ञानानुरागमहिमातिशयान्तसीम्ने ।
नाथाय नाथमुनयेऽत्र परत्र चापि
नित्यं यदीयचरणौ शरणं प्रपद्ये ॥ २ ॥

[ वसन्ततिलकम् ]

भूयो नमोऽपरिमिताच्युतभक्तितत्त्व-
ज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्ति-
योगाय नाथमुनये यमिनां वराय ॥ ३ ॥

[ वसन्ततिलकम् ]

तत्त्वेन यश्चिदचिदीश्वर-तत्स्वभाव-
भोगापवर्ग- तदुपायगतीरुदारः ।
सन्दर्शयन् निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ॥ ४ ॥

[ वसन्ततिलकम् ]

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्बकुलाभिरामं
श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥ ५ ॥

[ वसन्ततिलकम् ]

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्
अस्मन्मनोरथपथः सकलः समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्
पादारविन्दमरविन्दविलोचनस्य ॥ ६ ॥

[ वसन्ततिलकम् ]

तत्त्वेन यस्य महिमार्णवशीकराणुः
शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्त्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ ७ ॥

[ वसन्ततिलकम् ]

यद्वा श्रमावधि यथामति वाप्यशक्तः
स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ८ ॥

[ वसन्ततिलकम् ]

किञ्चैष शक्त्यतिशयेन न[1] तेऽनुकम्प्यः
स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धे-
रित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ ९ ॥

[ वसन्ततिलकम् ]

नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः
स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥ १० ॥

---

१. "शक्त्यतिशये ननु" इति पाठान्तरम् खेमराजीयं चिन्त्यम् ।

[ वसन्ततिलकम् ]

स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण त्वयि न मृष्यति वैदिकः कः ।
ब्रह्मा शिवः शतमखः परमस्वराडि-
त्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ ११ ॥

[ वसन्ततिलकम् ]

कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः ।
कस्यायुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ १२ ॥

[ वसन्ततिलकम् ]

वेदापहारगुरुपातकदैत्यपीडा-
द्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपती[1] परिपाति कस्य
पादोदकेन स शिवः स्वशिरोधृतेन ॥ १३ ॥

[ वसन्ततिलकम् ]

कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन चैष परवानिति शक्यशङ्कः ॥ १४ ॥

---

1. प्रजा पशुपतिः – इति खेमराजीयः अपपाठः ।

[ वसन्ततिलकम् ]

त्वां शीलरूपचरितैः परमप्रकृष्ट-
सत्त्वेन सात्विकतया प्रबलैश्च शास्त्रैः।
प्रख्यात-दैव-परमार्थविदां मतैश्च
नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १५॥

[ वसन्ततिलकम् ]

उल्लङ्घितत्रिविधसीमसमातिशायि-
सम्भावनं तव परिव्रढिमस्वभावम्।
मायाबलेन भवतापि निगूह्यमानं
पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥ १६॥

[ वंशस्थविलम् ]

यदण्डमण्डान्तरगोचरं च यद्
दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परं पदं
परात्परं ब्रह्म च ते विभूतयः ॥ १७ ॥

[ वंशस्थविलम् ]

वशी वदान्यो गुणवानृजुः शुचिर्-
मृदुर्दयालुर्मधुरः स्थिरः समः ।
कृती कृतज्ञस्त्वमसि स्वभावतः
समस्तकल्याणगुणामृतोदधिः ॥ १८ ॥

[ वंशस्थविलम् ]

उपर्युपर्यब्जभुवोऽपि पूरुषान्
प्रकल्प्य ते ये शतमित्यनुक्रमात्।
गिरस्त्वदेकैकगुणावधीप्सया
सदा स्थिता नोद्यमतोऽतिशेरते ॥ १९ ॥

[ वंशस्थविलम् ]

त्वदाश्रितानां जगदुद्भवस्थिति-
प्रणाशसंसारविमोचनादयः ।
भवन्ति लीला विधयश्च वैदिका-
स्त्वदीयगम्भीरमनोऽनुसारिणः ॥ २० ॥

[ वंशस्थविलम् ]

नमो नमो वाङ्मनसातिभूमये
नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये
नमो नमोऽनन्तदयैकसिन्धवे ॥ २१ ॥

[ बाला – उपजातिः ]

न धर्मनिष्ठोऽस्मि न चात्मवेदी
न भक्तिमाँस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिः शरण्य
त्वत्पादमूलं शरणं प्रपद्ये ॥ २२ ॥

[ रामा – उपजातिः ]

न निन्दितं कर्म तदस्ति लोके
सहस्रशो यन्न मया व्यधायि।
सोऽहं विपाकावसरे मुकुन्द
क्रन्दामि सम्प्रत्यगतिस्तवाग्रे ॥ २३ ॥

[ इन्द्रवज्रा ]

निमज्जतोऽनन्तभवार्णवान्त-
श्चिराय मे कूलमिवासि लब्धः।
त्वयापि लब्धं भगवन्निदानीम्
अनुत्तमं पात्रमिदं दयायाः ॥ २४ ॥

[ जया – उपजातिः ]

अभूतपूर्वं मम भावि किं वा
सर्वं सहे मे सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानाम्
पराभवो नाथ न तेऽनुरूपः ॥ २५ ।

[ वंशस्थविलम् ]

निरासकस्यापि न तावदुत्सहे
महेश हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुः स्तनन्धयो
न जातु मातुश्चरणौ जिहासति ॥ २६ ॥

[ वंशस्थविलम् ]

तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरकं[1] हि वीक्षते ॥ २७ ॥

[ वंशस्थविलम् ]

त्वदङ्घ्रिमुद्दिश्य कदापि केनचिद्-
यथा तथा वापि सकृत्कृतोऽञ्जलिः।
तदैव मुष्णात्यशुभान्यशेषतः
शुभानि पुष्णाति न जातु हीयते ॥ २८ ॥

---

१. "इक्षुरसं समीक्षते" ऐसा पाठान्तर है।

[ वंशस्थविलम् ]

उदीर्णसंसारदवाशुशुक्षणिं[1]
क्षणेन निर्वाप्य पराञ्च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुज-
द्वयानुरागामृतसिन्धुशीकरः ॥ २९ ॥

[ वंशस्थविलम् ]

विलासविक्रान्तपरावरालयं[2]
नमस्यदार्तिक्षपणे कृतक्षणम् ।
धनं मदीयं तव पादपङ्कजं
कदा नु साक्षात्करवाणि चक्षुषा ॥ ३० ॥

---

१. आशुशुक्षणिः = अग्नि । २. परावरालयम् = ऊर्ध्व तथा अधोलोक ।

[ वंशस्थविलम् ]

कदा पुनः शङ्खरथाङ्गकल्पक-
ध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ।
त्रिविक्रम त्वच्चरणाम्बुजद्वयं
मदीयमूर्धानमलङ्करिष्यति ॥ ३१ ॥

[ वंशस्थविलम् ]

विराजमानोज्ज्वलपीतवाससं
स्मितातसीसूनसमामलच्छविम् ।
निमग्ननाभिं तनुमध्यमुल्लसद्-
विशालवक्षःस्थलशोभिलक्षणम् ॥ ३२ ॥

[ वंशस्थविलम् ]

चकासतं ज्याकिणकर्कशैः शुभै-
श्चतुर्भिराजानुविलम्बिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषण-
श्लथालकाबन्धविमर्दशंसिभिः ॥ ३३ ॥

[ वंशस्थविलम् ]

उदग्रपीनांसविलम्बिकुण्डला-
लकावलीबन्धुरकम्बुकन्धरम् ।
मुखश्रिया न्यक्कृतपूर्णनिर्मला-
मृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥ ३४ ॥

[ वंशस्थविलम् ]

प्रबुद्धमुग्धाम्बुजचारुलोचनं
सविभ्रमभ्रूलतमुज्ज्वलाधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं
ललाटपर्यन्तविलम्बितालकम् ॥ ३५ ॥

[ वंशस्थविलम् ]

स्फुरत्किरीटाङ्गदहारकण्ठिका-
मणीन्द्रकाञ्चीगुणनुपूरादिभिः ।
रथाङ्गशङ्खासिगदाधनुर्वरै-
र्लसत्तुलस्या वनमालयोज्ज्वलम् ॥ ३६ ॥

[ वंशस्थविलम् ]

चकर्थ यस्या भवनं भुजान्तरं
तव प्रियं धाम यदीयजन्मभूः ।
जगत्समस्तं यदपाङ्गसंश्रयं
यदर्थमम्भोधिरमन्थ्यबन्धि च ॥ ३७ ॥

[ वंशस्थविलम् ]

स्ववैश्वरूप्येण सदानुभूतया-
प्यपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैः
सदा तवैवोचितया तव श्रिया ॥ ३८ ॥

[ वंशस्थविलम् ]

तया सहासीनमनन्तभोगिनि
प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डल-
प्रकाशमानोदरदिव्यधामनि ॥ ३९ ॥

[ वंशस्थविलम् ]

निवासशय्यासनपादुकांशुको-
पधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषताङ्गतै-
र्यथोचितं शेष इतीर्यते जनैः ॥ ४० ॥

[ वंशस्थविलम् ]

दासः सखा वाहनमासनं ध्वजो
यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता
त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिना ॥ ४१ ॥

[ वंशस्थविलम् ]

त्वदीयभुक्तोज्झितशेषभोजिना
त्वया विसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना न्यवेदि तत्
तथानुजानन्तमुदारवीक्षणैः ॥ ४२ ॥

[ वंशस्थविलम् ]

हताखिलक्लेशमलैः स्वभावत-
स्त्वदानुकूल्यैकरसैस्तवौचितैः ।
गृहीत-तत्तत्परिचारसाधनै-
र्निषेव्यमाणं सचिवैर्यथोचितम् ॥ ४३ ॥

[ वंशस्थविलम् ]

अपूर्वनानारसभावनिर्भर-
प्रबुद्धया मुग्धविदग्धलीलया ।
क्षणाणुवत्क्षिप्तपरादिकालया
प्रहर्षयन्तं महिषीं महाभुजम् ॥ ४४ ॥

[ वंशस्थविलम् ]

अचिन्त्यदिव्याद्भुतनित्ययौवन-
स्वभावलावण्यमयामृतोदधिम् ।
श्रियः श्रियं भक्तजनैकजीवितं
समर्थमापत्सखमर्थिकल्पकम् ॥ ४५ ॥

[ वंशस्थविलम् ]

भवन्तमेवानुचरन्निरन्तरं
प्रशान्त-निःशेषमनोरथान्तरः ।
कदाहमैकान्तिकनित्यकिङ्करः
प्रहर्षयिष्यामि सनाथजीवितम् ॥ ४६ ॥

[ मालिनी ]

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष योऽहं योगिवर्याग्रगण्यैः ।
विधि-शिव-सनकाद्यैर्ध्यातुमत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ॥ ४७ ॥

[ सुन्दरी* ]

अपराधसहस्रभाजनं
पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे
कृपया केवलमात्मसात्कुरु ॥ ४८ ॥

---

*वियोगिनी - इति अपरं नाम ।

[ सुन्दरी ]

अविवेकघनान्धदिङ्मुखे
बहुधा सन्ततदुःखवर्षिणि ।
भगवन् भवदुर्दिने पथः
स्खलितं मामवलोकयाच्युत ॥ ४९ ॥

[ सुन्दरी ]

न मृषा परमार्थमेव मे
शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे ततो
दयनीयस्तव नाथ दुर्लभः ॥ ५० ॥

[ सुन्दरी ]

तदहं त्वद्दते न नाथवान्
मद्दते त्वं दयनीयवान्न च ।
विधिनिर्मितमेतदन्वयं
भगवन् पालय मा स्म जीहपः ॥ ५१ ॥

[ सुन्दरी ]

वपुरादिषु योऽपि कोऽपि वा
गुणतोऽसानि यथातथाविधः ।
तदयं तव पादपद्मयो-
रहमद्यैव मया समर्पितः ॥ ५२ ॥

[ सुन्दरी ]

मम नाथ यदस्ति योऽस्म्यहं
सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधी-
रथवा किन्नु समर्पयामि ते ॥ ५३ ॥

[ सुन्दरी ]

अवबोधितवानिमां यथा
मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां
भगवन्! भक्तिमपि प्रयच्छ मे ॥ ५४ ॥

[ सुन्दरी ]

तव दास्यसुखैकसङ्गिनां
भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मा स्म भू-
दपि मे जन्म चतुर्मुखात्मना ॥ ५५ ॥

[ वंशस्थविलम् ]

सकृत्त्वदाकारविलोकनाशया
तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय
क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥ ५६ ॥

[ सुन्दरी ]

मम नाथ यदस्ति योऽस्म्यहं
सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधी-
रथवा किन्तु समर्पयामि ते ॥ ५३ ॥

[ सुन्दरी ]

अवबोधितवानिमां यथा
मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां
भगवन् ! भक्तिमपि प्रयच्छ मे ॥ ५४ ॥

[ सुन्दरी ]

तव दास्यसुखैकसङ्गिनां
भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मा स्म भू-
दपि मे जन्म चतुर्मुखात्मना ॥ ५५ ॥

[ वंशस्थविलम् ]

सकृत्त्वदाकारविलोकनाशया
तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय
क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥ ५६ ॥

[ शिखरिणी ]

न देहं न प्राणान्न च सुखमशेषाभिलषितं
न चात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन विज्ञापनमिदम् ॥ ५

[ शिखरिणी ]

दुरन्तस्यानादेरपरिहरणीयस्य महतो
निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे
तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥ ५

[ शिखरिणी ]

अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-
स्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम् ।
तथापीत्थं रूपं वचनमवलम्ब्यापि कृपया
त्वमेवैवम्भूतं धरणिधर मे शिक्षय मनः ॥ ५९ ॥

[ शिखरिणी ]

पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्
त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥ ६० ॥

[ शिखरिणी ]

जनित्वाहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसा-
मधोऽधः पापात्मा शरणद निमज्जामि तमसि ।। ६

[ शिखरिणी ]

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधे-
रपारादुत्तीर्णस्तव परिचरेयं चरणयोः ।।६२

[ मालिनी ]

रघुवर यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यच्च चैद्यस्य कृष्ण ।
प्रतिभवमपराद्धुर्मुग्ध सायुज्यदोऽभू-
र्वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥ ६३ ॥

[ उपेन्द्रवज्रा ]

ननु प्रपन्नः सकृदेव नाथ
तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां
मदेकवर्जं किमिदं व्रतं ते ॥ ६४ ॥

[ ऋद्धिः* ]

अकृत्रिमत्वच्चरणारविन्द-
प्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य
प्रसीद मद्वृत्तमचिन्तयित्वा ॥ ६५ ॥

॥ इति श्रीयामुनार्यविरचितमालवन्दारस्तोत्रं सम्पूर्णम् ॥

[ पद्यम् ]

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनार्यं नमामि तम् ॥

*उपजातिभेदः ।

॥ श्रीः ॥

# अथ वरदवल्लभा स्तोत्रम्

[ शार्दूलविक्रीडितम् ]

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं
वेदात्मा विहगेश्वरो जवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥१॥

[ शार्दूलविक्रीडितम् ]

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।
तां त्वां दास इति प्रपन्न[1] इति च स्तोष्याम्यहं निर्भयो[2]
लोकैकेश्वरि लोकनाथदयिते दान्ते दयांते विदन् ॥ २ ॥

[ शार्दूलविक्रीडितम् ]

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
श्रेयो नह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्याक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ॥ ३ ॥

---

१. "प्रसन्न" इति पाठभेदः । २. "निर्भयम्" इति क्वचित् पाठः ।

[ शार्दूलविक्रीडितम् ]

शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरे-
मूर्त्तं ब्रह्म ततोऽपि यत् प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि ता-
न्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४ ॥

[ पद्यम् ]

आकारत्रयसम्पन्नामरविन्दनिवासिनीम् ।
अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥ ५ ॥

॥ इति श्रीवरदवल्लभास्तोत्रं समाप्तम् ॥

॥ श्रीः ॥

# रामानुजचतुःश्लोकी

[ औपच्छन्दसकम् ]

अनिशं भजतामनन्यभाजां
चरणाम्भोरुहमादरेण पुंसाम् ।
वितरसि विविधां विभूतिनिष्ठां
जय रामानुज रङ्गधाम्नि नित्यम् ॥ १ ॥

[ औपच्छन्दसकम् ]

जयिनो विमतांस्त्वदीयसूक्ति
कुशलीभूय कुदृष्टिभिः समेतान् ।
शकलीकुरुषे विपश्चिदोघान्
जय रामानुज रङ्गधाम्नि नित्यम् ॥ २ ॥

[ औपच्छन्दसकम् ]

जय मायिमतान्धकारभानो
जय बाह्यप्रमुखाटवीकृशानो ।
जय सन्मतसिन्धुशीतभानो
जय रामानुज रङ्गधाम्नि नित्यम् ॥ ३ ॥

[ औपच्छन्दसकम् ]

श्रुतिसम्मतसुप्रमाणतत्त्वं
कृपयाऽऽलोच्य सुधासमानबुद्ध्या ।
अकृथा विततैकभाष्यरत्नं
जय रामानुज रङ्गधाम्नि नित्यम् ॥ ४ ॥

॥ इति रामानुजचतुःश्लोकी समाप्ता ॥

## श्रीनिवास-स्तोत्र-ग्रन्थमाला

| | | | मूल संस्कृत एवं हिन्दी अनुवाद | मूल्य रु. पै. |
|---|---|---|---|---|
| प्रथम पुष्प | – | सुदर्शनाष्टकम् | ,, | ०–२५ |
| द्वितीय पुष्प | – | गजेन्द्रमोक्षस्तवः | ,, | ०–५० |
| तृतीय पुष्प | – | कनकधारालक्ष्मीस्तवः (वेदान्तदेशिकाचार्यकृतः) | ,, | ०–५० |
| चतुर्थ पुष्प | – | श्री विष्णुसहस्रनाम | स्थूलाक्षर मूल मात्र | ०–३५ |
| पञ्चम पुष्प | – | श्री मुकुन्दमाला (कुलशेखरसूरिकृता) | मूल संस्कृत एवं हिन्दी अनुवाद | ०–५० |
| षष्ठ पुष्प | – | श्री आळवन्दारस्तोत्रम् (श्री यामुनाचार्यकृतम्) | ,, | ०–५० |



| | | |
|---|---|---|
| श्री पराशर भट्टार्यकृता अष्टश्लोकी | ,, | ०–७५ |

